यः सर्वेषां भवति ह्यर्चनीय
उत्सेचने स्तम्भ इवाभिजातः ।
यस्मै वाचं सुप्रशस्तां वदन्ति
स वै देवान्गच्छति संयतात्मा ॥ २२

न तथा वक्तुमिच्छन्ति कल्याणान्पुरुषे गुणान् ।
यथैषां वक्तुमिच्छन्ति नैर्गुण्यमनुयुञ्जकाः ॥ २३

यस्य वाङ्मनसी गुप्ते सम्यक्प्रणिहिते सदा ।
वेदास्तपश्च त्यागश्च स इदं सर्वमाप्नुयात् ॥ २४

आक्रोशनावमानाभ्यामबुधाद्वर्धते बुधः ।
तस्मान्न वर्धयेदन्यं न चात्मानं विहिंसयेत् ॥ २५

अमृतस्येव संतृप्येदवमानस्य वै द्विजः ।
सुखं ह्यवमतः शेते योऽवमन्ता स नश्यति ॥ २६

यत्क्रोधनो यजते यद्ददाति
यद्वा तपस्तप्यति यज्जुहोति ।
वैवस्वतस्तद्धरतेऽस्य सर्वं
मोघः श्रमो भवति क्रोधनस्य ॥ २७

चत्वारि यस्य द्वाराणि सुगुप्तान्यमरोत्तमाः ।
उपस्थमुदरं हस्तौ वाक्चतुर्थी स धर्मवित् ॥ २८

सत्यं दमं ह्यार्जवमानृशंस्यं
धृतिं तितिक्षामभिसेवमानः ।

S. 12. [illegible]
B. 12. [illegible]. 29
K. 12. [illegible]. 29

T1 G2. 3 °चने; T2 °चनैः; Cn (gloss: उन्नतमनस्करः, ब्रह्माण्डमण्डपस्तम्भभूतः) °चनः (for उत्सेचने). K1 उत्सेचरेः स( sup. lin. स्त )म्ब इवाभिजातः (sic). ❀ Ca: उत्सेचने, जलसारणीसमीपे स्तम्भो, वृक्षः। सति सेके संवर्धते शाखादिमत्त्वात् । ❀ — c) M5–7 तस्मै (for यस्मै). Dn4 वाचं; D5 वाचः (for वाचं). K3 V1 B0. 6–9 Da3. a4 Dn1. n4 D3 D2. 3. 8 G2 सुप्रसन्नां (for °शस्तां). — d) K2 वेदान् (for देवान्). K3 G1 संयतात्मा (for संयतात्मा).

23 b) K2. 4. 7 D5. 6. 7. 8 कल्याणं (for कल्याणान्). K1. 2. 4 पुरुषेश्वरान्; D4. 5 °षे गुणं; D5 °षो जनः; D7 °षे जनाः (for °षे गुणान्). — c) D4 तथैषां; T G3 यथैवं; G1 यथैव (for यथैषां). — d) V1 नैर्गुण्यं पापचेतसः. ❀ Cn: अनुयुञ्जकाः, स्पर्धावन्तः । ❀

24 With 24, cf. Manu. 2. 160. — a) K1 तस्य (for यस्य). D4. 7 गुप्ते (for गुप्ते). — b) K7 B6 (marg. as in text). 7 Da3. a4 सम्यक्शुद्धे च सर्वदा. — d) D4. 7 धर्मम् (for सर्वम्). T1 G1. 6 इदं सर्वमवाप्नुयात्.

25 a) K1. 2. 4 आक्रोश( K4 °श )नावमानाभ्याम्; B1. 3 Da3 a4 Dn4 D5 D2. 3. 8 आक्रोशनविमा°; Dn1 आत्माक्रोशविमा°; M1. 5–7 इहाक्रोशावमा°. — b) K2. 4 अबधाद्; T2 अबुद्धाद्; M3 अबुद्धा (for अबुधाद्). M3 वर्धते (sic) (for वर्धते). K1 बुधः (sic); K4 बधः (for बुधः). K3 V1 B0. 6–9 Da3 ना( Da3 मा )बुधान्वर्धयेद्बुधः; K7 D4. 8 अबुद्धो वर्धयेद्बुधान्; Da4 Dn1 D5 D2. 3 (before corr.). 8 ना( Da4 मा )बुधान्वोधयेद्बुधः; Dn4 D5 नाबुधान्ना( Dn4 °ना )र्हयेद्बुधः; D4. 7 अबुद्धो गर्हयेत्परान्; T1 G1. 2. 6 ना( G3 [before corr.] मा )बुद्धो व( G1 °द्धाद्-; G3 °धो व )र्धते बुधः (G1 °द्धः). — c) Dn4 Da3 (marg. sec. m.) D2 (marg. sec. m. as in text). 4. 7 गर्हयेद् (for वर्ध°). M1. 5–7 अन्यान् (for अन्यं). G1 तस्मान्न वध्यते वचन्. — d) K3 वा (for च). G1 न हिंसयेत् (for विहिं°).

26 ab) B6 transp. अमृतस्येव and अवमानस्य. B6 अमृतस्यैव (for °स्येव). D4 संपश्येद् (for °तृप्येद्). K1. 2. 4 वै बुधः; K3 V1 B0. 6–9 Da3. a4 Dn1. n4 D5 D2. 3. 8 पंडितः (for वै द्विजः). — c) K4 अमवतः; G1 अवमितः (for °मतः). — d) K1. 2 योवमंता (for °मन्ता). — After 26, G3 ins. an addl. colophon [ Adhy. no.: 123 ].

27 a) B1. 3 Da3. a4 D5 यः (for यत्). K3 क्रोधनो (for क्रोधनो). K4 Da3 Dn1. n4 D5 D2. 3. 8 M3 यजति; D7 ददते (for यजते). K1 ददाति; Dn4 ददामि (for ददाति). M1 यत्क्रोधनो यजयेद्ददाति. — b) D4. 7 यच्चतपस्; G1 यच्चात° (for यद्वा त°). D4. 7 तपते (for तप्यति). — c) K1. 2 हरेत (for हरते). K6 चास्य; D4. 7 G1 तस्य (for ऽस्य). — d) Da3 Dn4 Dn1 M3 मोघश्रमो. K4 V1 B0. 6–9 Da4 Dn1. n4 D5 D2–4. 7–9 G3 M1 भवति हि; K7 हि भवति (for भवति).

28 = (var.) 12. 261. 27. — b) K1. 4 सुगुप्तानि महात्मनः; D4. 7 °न्युत्तरोत्तरे. — c) M1. 5–7 उपस्थ (for उपस्थम्). B6 (marg. as in text) जिह्वा (for हस्तौ). — d) T1 च (for स).

29 a) V1 T G1. 3 दमस्त् (for दमं). K2. 7 हि

C. 12. 11020
B 12. 300(309). 29
K. 12. 305. 29

स्वाध्यायनित्योऽस्पृहयन्परेषा-
मेकान्तशील्यूर्ध्वगतिर्भवेत्सः ॥ २९
सर्वानेतानानुचरन्वत्सवच्चतुरः स्तनान् ।
न पावनतमं किंचित्सत्यादध्यगमं क्वचित् ॥ ३०
आचक्षेऽहं मनुष्येभ्यो देवेभ्यः प्रतिसंचरन् ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ३१
यादृशैः संनिवसति यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ ३२
यदि सन्तं सेवते यद्यसन्तं
तपस्विनं यदि वा स्तेनमेव ।
वासो यथा रङ्गवशं प्रयाति
तथा स तेषां वशमभ्युपैति ॥ ३३
सदा देवाः साधुभिः संवदन्ते
न मानुषं विषयं यान्ति द्रष्टुम् ।
नेन्दुः समः स्यादसमो हि वायु-
रुच्चावचं विषयं यः स वेद ॥ ३४
अदुष्टं वर्तमाने तु हृदयान्तरपूरुषे ।
तेनैव देवाः प्रीयन्ते सतां मार्गस्थितेन वै ॥ ३५

(marg. as in text) G3 M5. 7 चार्जवम्; K3 Da3. 4 T1 G1. 3 स्वार्ज° (for ह्यार्ज°). K2 आनृशस्यं; K6 G1 °शंस (for °शंस्यं). — b) K7 G1 धृतिस्र् (for धृतिं). K6 V1 Bo. 7. 8 (marg.). 9 Da3. 4 Dn1. n4 D3 D2. 3. 5. 7. 8 अति-; G2 M1. 5–7 इति (for अभि-). D5. 7 -सेव(D7 °स्व)मानं (for °मानः). — c) G1 स्वाध्यानिविह्वो (sic) (for °यनित्यो). D5 om. from स्पृहयन् up to स्तनान् (in 30b). D7 न स्पृहयेत; G3 [ऽ]स्वहरः (for ऽस्पृहयन्). — d) K1. 3 -शीलो; T2 -शय्यो (for -शीली). K1. 3 ह्यूर्ध्वं- (for ऊर्ध्वं-). B3 D6 -मतिर् (for -गतिर्). K6 Bo. 7. 9 Da3. 4 T2 M1. 5–7 भवेत (for भवेत्सः).

30 Before 30, T2 G1. 3 ins. साध्याः. D5 om. 30ab (cf. v. l. 29). — a) K1 त्वेतान्; K4 V1 B3 स्वेतान्; K6 Da3. 4 Dn1. n4 D2. 3. 8 चैनान्; Bo. 7. 9 D7 चैतान्; T G1. 3. 6 वेदान्; M1. 7 लोकान्; M5. 6 देवान् (for एतान्). K7 B9 परि- (for अनु-). K6 -चरत्; K7 D4. 7. 9 -च(D4 -व)रेद्; T2 -भवन् (for -चरन्). Bo सर्वांस्त्वेतननुचरेन्; G2 सर्वं स्वेतानुनुचरन्. — c) K1. 6 corrupt; M1. 6. 7 न पावनमतः किंचित्. — d) K1 अध्यगतं; K2 अन्यगमं (for अध्य°).

31 Before 31, T2 G1. 3 ins. हंसः. — a) K7 G1 आचक्ष्ये; G2 °चक्ष्ये (for °चक्षे). K6 मानवेभ्यो; V1 Bo. 8. 9 Dn2 Da3 मानुषे(B9 Dn3 °ष्ये)भ्यो (for मनुष्येभ्यो). — b) T2 M1. 5–7 प्रहितश्चरन्; G1 परिसंचरन् (for प्रति°). — c) K6 B8 (marg. as in text) Da3. 4 संधानं; T3 सौपानं (for सोपानं).

32 a) K2. 3. 4 यादृशः (for यादृशैः). K1 स विवसते; K3. 4 संनिवहते; K7 D4. 9 संविवसते; D5. 7 संनिवसते; T1 G3 वा संवदते; G1. 3 M1. 5–7 संवदते; G2 स विवहते (for संनिवसति). T2 यो यादृशैः संवदते. — b) K1. 2. 4 चैव (for चोप-). — c) K1. 2 इच्छेश्च; K6 D5. 7 इच्छेत (for इच्छेच्च). — d) B9 Da4 पुरुषः.

33 a) K6 V1 Bo. 7–9 Da3. 4 Dn1. n4 Ds1 D2. 3. 5. 7. 8 G2 M1. 5–7 सेवति (for °ते). — b) T1 G1. 6 वा यदि वा (for यदि वा). T1 स्तेयम् (for स्तेनम्). D5 एव च (for एव). — c) V1 Bo रंगं; T G1–3. 6 M1. 5–7 राग- (for रङ्ग-). K1 -वसं; T1 -वशः (for -वशं). — d) G1 वयम् (for वशम्).

34 a) K1. 2. 4 V1 यदि; B6 (marg. as in text) यदा; D5. 7 यथा (for सदा). K2 सेवाः (sic); G1. 3 देवः (for देवाः). K1 संहवंति; K2 संवदंति; K4 संवहंति; K7 V1 D4. 9 संवसंति; B6–8 Da4 °संते; B9 संनमंत; Dn4 संवदंतं; T1 G3 °संतो; G1. 3 °दंतो (for संवदन्ते). — b) Da4 मानुषां (for °षं). D5 याति (for यान्ति). K1. 6. 7 B6 (marg. as in text) D4. 7. 9 दुष्टं; D6 G2 दृष्टं (for द्रष्टुम्). K2 न मानुषो विवाति **दुष्टं. — c) K1. 2. 4 इंद्रः; V1 Bo. 6–9 Da3. 4 T G1–3. 6 M1. 5–7 नेंद्रः; D5. 7 नरेंद्र- (for नेन्दुः). K1 समाः. K7 D4. 9 असमा हि तस्य; D5. 7 °मो हितः स्याद् (for °मो हि वायुर्). ❀ Cn: इन्दुरमृतमयोऽपि न समः किं तु उपचयापचयधर्मा । तथा वायुरप्यसम एव, मन्दमध्यमतीव्रभेदात् । ❀ — d) K2. 6. 7 D9 यश्च; D5. 7 G3 M1. 5–7 यस्य; Ca यः स (as in text). K7 वेदाः; M1. 5. 7 वेदः (for वेद).

35 a) K4 अनुष्टं; B6 Ds2 G6 अदृष्टं (for अदुष्टं). B6 वर्तमानं; T1 G1. 3. 6 M7 °ते यस्य (for °माने). K7 तु (for तु). K2 अदुष्टवर्तो माने तु; Ds1 °ष्टं वर्तमानेषु. — b) K7 D4. 9 -पौरुषे; B9 -पुरुषे; Ds1 -पूरुषः (for

शिश्नोदरे येऽभिरताः सदैव
स्तेना नरा वाक्परुषाश्च नित्यम् ।
अपेतदोषानिति तान्विदित्वा
दूराद्देवाः संपरिवर्जयन्ति ॥ ३६
न वै देवा हीनसत्त्वेन तोष्याः
सर्वाशिना दुष्कृतकर्मणा वा ।
सत्यव्रता ये तु नराः कृतज्ञा
धर्मे रतास्तैः सह संभजन्ते ॥ ३७
अव्याहृतं व्याहृताच्छ्रेय आहुः
सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।
धर्मं वदेद्व्याहृतं तत्तृतीयं
प्रियं वदेद्व्याहृतं तच्चतुर्थम् ॥ ३८
साध्या ऊचुः ।
केनायमावृतो लोकः केन वा न प्रकाशते ।
केन त्यजति मित्राणि केन स्वर्गं न गच्छति ॥ ३९
हंस उवाच ।
अज्ञानेनावृतो लोको मात्सर्यान्न प्रकाशते ।
लोभात्त्यजति मित्राणि सङ्गात्स्वर्गं न गच्छति ॥ ४०
साध्या ऊचुः ।
कः स्विदेको रमते ब्राह्मणानां
कः स्विदेको बहुभिर्जोषमास्ते ।
कः स्विदेको बलवान्दुर्बलोऽपि

C. 12. 10932
B. 12. 300(299). 41
K. 12. 308. 41

°वे ). — $^{c}$) G1 प्रीयंते ( for प्रीयन्ते ). — $^{d}$) K1 D5. 7 मार्गे ; D11 मार्गं ( for मार्ग- ). Da3. a4 सर्वां मार्गंति तेन वै.

36 $^{a}$) Bo. 3 [ऽ]पि ( for वे ). K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 D3 D2–5. 7–9 निरताः ( for ऽभि° ). — $^{b}$) K1. 2 B6 Dn4 T2 -धु( K3 -यू )वचाश्च ; D11 -परुषश्च ( for °षाश्च ). — $^{c}$) K3 -देवान् ; T G1–3. 6 M1. 5–7 -धर्मा ( for -दोषान् ). ॐ Cn : अपेतदोषान्, प्रायश्चित्तेनेति शेषः । ॐ — $^{d}$) Da3. a4 Dn4 दूरा ( for दूरात् ).

37 $^{a}$) T2 G6 -सत्वेन ( for -सत्त्वेन ). T1 om. न तो. D5. 7 न वै देवा हीनसत्त्वे मनुष्याः. — $^{b}$) G1 सर्वाशना दुष्कृतं कर्मणा वा. — $^{c}$) K7 सत्यं ( for सत्य- ). K1 नरः. — $^{d}$) K6 G3 ते ( for तैः ). K3 सहत्वं ( for सह सं- ). K7 D4. 9 संवसंति ; Da4 D3 संभजंति ( Da4 °तं ) ( for °जन्ते ).

38 $^{a}$) D3 om. ( hapl. ) from व्याहृता up to हृतं ( in $38^{d}$ ). K6 व्याहृतात् ; Dn4 °दात् ( for °तात् ). G1 अव्याहृतं व्याहृतात्छ्रेयमाहुः. — $^{b}$) Dn1 वेदे ; G1 वदे ( for वदेद् ). K2. 4 om. ( hapl. ) from तद्वि up to व्याहृतं ( in $38^{d}$ ). G3 om. from तद्वि up to चतुर्थम् ( in $38^{d}$ ). — K3 om. $38^{cd}$. V1 reads $38^{c}$ on marg. — $^{c}$) Dn3 T1 G1. 3 धर्म्यं ( for धर्मं ). B3 वेदेद् ( for वदेद् ). Dn4 तृतीये. — $^{d}$) Da4 तं ( for ( for तत् ).

39 $^{a}$) K1 corrupt. D5 आवृता ( for °तो ). — $^{b}$) K7 om. केन वा न. — D5 om. ( hapl. ) $39^{d}$–$40^{c}$.

40 D5 om. $40^{abc}$ ( cf. v. l. 39 ). K7 om. $40^{a}$. V1 reads 40 on marg. — $^{a}$) K3 लोके ( for लोको ). — $^{b}$) B7 मात्सर्यात्रिःप्रकाशते. — $^{c}$) D7 त्यजंति. — $^{d}$) Da3 केन ( for सङ्गात् ).

41 The sequence of 41–42 in D4 is : $41^{a}$, $42^{b}$, $41^{c}$, and $42^{d}$. V1 reads the ref. on marg. — $^{a}$) K1 का स्विद् ; K7 Dn4 D4. 5. 7. 8 कश्चिद् ; T G1. 2. 6 किं स्विद् ( for कः स्विद् ). V1 न रमते ( for रमते ). — D4 om. ( hapl. ) $41^{b}$. — $^{b}$) K4 T G1. 2. 6 किं स्विद् ; K7 Dn4 D5. 7. 8 कश्चिद् ( for कः स्विद् ). B7 D5. 7 जोषम् ; G1 दोषम् ( for जोषम् ). — G1 om. ( hapl. ) $41^{c}$–$42^{b}$. — $^{c}$) K7 Dn4 D4. 5. 7. 8 कश्चिद् ; T G2. 6 किं स्विद् ( for कः स्विद् ). K6 Bo Da3. a4 T G2. 3. 6 M1. 5–7 पृष्ठो ( for एको ). T G3. 6 वा ( for अपि ). — After $41^{c}$, Dn3 reads $42^{d}$ for the first time, repeating it in its proper place. Dn3 om. $41^{d}$. D4 om. $41^{d}$–$42^{a}$. — $^{d}$) K1 का स्विद् ; K7 Dn4 D5. 7. 8 कश्चिद् ; B6 कः स्विद् ; Dn1 कं स्विद् ; T G3. 6 किं स्विद् ( for कः स्विद् ). K3 D8 पृष्ठः ( for पृष्ठो ). K3 Dn4 नावुवे( Dn4 °वे )ति ; K7 D5. 7. 8 नाम्बुवेति ; Da3. a4 Dn3 नान्ववेति ( for °वैति ).

42 For the sequence in D4, cf. v. l. 41. D5 om. $42^{a}$ ; G1 om. $42^{ab}$ ( for both, cf. v. l. 41 ). G3 om. ( hapl. ) 42. — $^{a}$) Dn3 प्राज्ञम् ( for प्राज्ञ ). B7 om. ब्राह्मणानां. — $^{b}$) K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 D3 D2. 3. 9 चैको ( for एको ). B7 D5. 7 जोषम् ( for जोषम् ). — $^{c}$) Dn4 प्राज्ञम्. K3 V1 B6. 9 Da3. a4

C. 12. 1.0882
B. 12. 70(288).41
K. 12. 288. 41

कः स्विदेषां कलहं नान्ववैति ॥ ४१

हंस उवाच ।

प्राज्ञ एको रमते ब्राह्मणानां
प्राज्ञ एको बहुभिर्जोषमास्ते ।
प्राज्ञ एको बलवान्दुर्बलोऽपि
प्राज्ञ एषां कलहं नान्ववैति ॥ ४२

साध्या ऊचुः ।

किं ब्राह्मणानां देवत्वं किं च साधुत्वमुच्यते ।
असाधुत्वं च किं तेषां किमेषां मानुषं मतम् ॥ ४३

हंस उवाच ।

स्वाध्याय एषां देवत्वं व्रतं साधुत्वमुच्यते ।
असाधुत्वं परीवादो मृत्युर्मानुषमुच्यते ॥ ४४

भीष्म उवाच ।

संवाद इत्ययं श्रेष्ठः साध्यानां परिकीर्तितः ।
क्षेत्रं वै कर्मणां योनिः सद्भावः सत्यमुच्यते ॥ ४५

इति श्रीमहाभारते शान्तिपर्वणि अष्टाशीत्यधिकद्विशततमोऽध्यायः ॥ २८८ ॥

D5. 7. 9 G1 M1. 5–7 एषां ( for एको ). — D8 om. ( hapl. ) 42c. Dn1 reads 42d for the first time after 41c. — d ) K1 प्राज्ञा. Dn4 येषां ( for एषां ). K1 नान्ववंति; K7 D4. 5. 7. 9 नाम्युपैति; Da3. a4 Dn2 नान्ववेति ( for °वैति ).

43 G1 om. the ref. — a ) K2 ब्रह्मणानां. K7 वेदत्वं; Dn4 दैवत्वं; G1 देवार्थं ( for देवत्वं ). — b ) K6. 7 किंचिद्; Dn1 किं तु; Da3 किं नु ( for किं च ). G1 [अ]साधुत्वम् ( for साधु° ). B7 किं च साधु प्रमुच्यते. — Da3 om. ( hapl. ) 43c–44d. D5 reads 43c–44b twice. — c ) B7 Dn1. n4 असाधुत्वे ( for °त्वं ). K2 transp. च and किं. — d ) M1. 7 तेषां ( for एषां ). K1 मानुष्यं; G1 °षीं ( for °षं ). T1 G6 व्रतं ( for मतम् ).

44 For the repetition in D5, cf. v. l. 43. Da1 om. 44 ( cf. v. l. 43 ). — a ) K1 एषा; Dn4 येषां ( for एषां ). — b ) B6 D2 एव च ( for उच्यते ). — c ) Da4 D4 परीवादे; D9 °वाहो ( for °वादो ). — d ) K1, 4. 5 V1 B6. 6–9 Da3 a4 D2. 3. 5 T G1. 3. 6 मानुष्यम्; D5. 7 मानुष; M7 °ष्य ( for °षम् ).

45 After the ref., T G1. 3. 6 M1. 5–7 ins.:

744* इत्युक्त्वा वरदो देवो भगवानजित अव्ययः ।
साध्यैर्दैवगणैः सार्धं दिवमेवारुरोह सः ।
एतद्यशस्यमायुष्यं पुण्यं स्वर्गाय तु ध्रुवम् ।
दर्शितं देवदेवेन परमेणाव्ययेन च ।

[ ( L. 1 ) G6 इत्युक्तो ( for °क्त्वा ). T2 G1. 3 परमो ( for वरदो ). — ( L. 3 ) T2 M1. 5–7 च ( for तु ). ]

— a ) Da1 अहं ( for अयं ). K6 Da1 श्रेष्ठ; B7 lacuna ( for श्रेष्ठः ). T G1. 3. 6 संवादोयमयं ( T2 G1 °दोयं नर- ) श्रेष्ठः ( T2 °ष्ठ ). — b ) D4 परिकीर्तिताः. — c ) D5. 7 कर्मणो ( for °णां ). K2 भूमिः; Da3 योनीः; D5. 7 G1 योनिं ( for योनिः ). ❀ Ca : क्षेत्रं, शरीरम् ॥ Cn : स्थूलसूक्ष्मभेदेन द्विविधम् । ❀ — d ) K1 संभावः; T2 सद्भावं; G1 सद्भावाः. K6 B6 Da3. a4 D7 सत्त्वम् ( for सत्यम् ).

Colophon. Ś1 D8 missing: K3. 5 B1–5 Da1. a3 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan* : K1. 2. 4. 6. 7 V1 B6. 6–9 Da3. a4 Dn1. n4 D8 D2–5. 7–9 T G1–3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name* : K1. 2. 4. 6. 7 V1 B6. 6–9 Da3. a4 Dn1. n4 D8 D2–5. 7–9 G2 M1. 5–7 हंसगीता ( B8 adds समाप्ता ); T1 साध्यहंससंवादः; G6 हंससाध्यसंवादः. — *Adhy. no.* ( figures, words or both ): K6 24; B7 T1 G1. 6 123; B8 126; Dn1 125; Dn4 Da3 G6 M6 124; T2 136; G3 139; M1. 6. 7 122. — *Śloka no.* : Da4 Dn1. n4 D8 45.

# २८९

युधिष्ठिर उवाच ।
सांख्ये योगे च मे तात विशेषं वक्तुमर्हसि ।
तव सर्वज्ञ सर्वं हि विदितं कुरुसत्तम ॥ १
भीष्म उवाच ।
सांख्याः सांख्यं प्रशंसन्ति योगा योगं द्विजातयः ।
वदन्ति कारणैः श्रेष्ठ्यं स्वपक्षोद्भावनाय वै ॥ २
अनीश्वरः कथं मुच्येदित्येवं शत्रुकर्शन ।
वदन्ति कारणैः श्रेष्ठ्यं योगाः सम्यङ्मनीषिणः ॥ ३
वदन्ति कारणं चेदं सांख्याः सम्यग्द्विजातयः ।
विज्ञायेह गतीः सर्वा विरक्तो विषयेषु यः ॥ ४
ऊर्ध्वं स देहात्सुव्यक्तं विमुच्येदिति नान्यथा ।
एतदाहुर्महाप्राज्ञाः सांख्यं वै मोक्षदर्शनम् ॥ ५
स्वपक्षे कारणं ग्राह्यं समर्थं वचनं हितम् ।
शिष्टानां हि मतं ग्राह्यं त्वद्विधैः शिष्टसंमतैः ॥ ६
प्रत्यक्षहेतवो योगाः सांख्याः शास्त्रविनिश्चयाः ।
उभे चैते मते तत्त्वे मम तात युधिष्ठिर ॥ ७　C. 12. 11042 B. 12. 301(300).7 K. 12. 306. 7

## 289

☞ This adhy. is missing in Ś1 D5 (cf. v. l. 12. 274. 13; 283. 15).

1 After the ref., G6 reads 12. 290. 1 for the first time, repeating the same in its proper place. G6 om. 1. — a) K1. 6 Da4 सांख्य- (for सांख्ये). — b) Da4 D5 अर्हति (for °सि). — c) K4. 6. 7 V1 B0. 6-8 Da3. a4 Dn1. n4 D2 D3-5. 7-9 सर्वज्ञ (for सर्वज्ञ). — d) B6 वेदितं; M1. 7 विहितं (for विदितं).

2 b) D5. 7 योगं (D7 योगं) योगि-; T1 G1-3. 6 योगं योगा (by transp.). — c) K4 B7 Dn1. n4 D5 D2. 5. 7. 8 कारणं; D2 °ण- (for °णैः). K1. 2. 4 V1 B3 (orig.) Dn1. n4 Da2 D1. 2. 8 श्रेष्ठं; B0. 8 (marg.). 8 Da3 श्रेष्ठ्यं; B7 lacuna; Da4 श्रैष्ठ्यः; D4 श्रेष्ठ-; D5. 7 सर्वे (for श्रेष्ठ्यं). — d) B7 lacuna for स्वपक्षो. K7 D4. 9 स्वपक्षोद्भासनाय; Da1 स्वपक्षोद्भावनाय; D5 स्वपक्षोद्भव°; G1 स्वपक्षोद्भावि°. ❁ Cv (reading भावनाद्भावनाय वै): भावनात्, इहलोकभावनात् ध्यानात् । भावनाय, परलोकभावनाय । ❁

3 a) K1 अनीश्वरेः; Da4 G5 °श्वरं (for °श्वरः). — b) K7 एव; B6 एतत् (for एवं). K1. 2 V1 B0. 6. 8 Da1 -कर्शन (K1 °न); K4 B7 -कर्शनं; D2 -कर्षण; D4. 8 -कर्शनं; T2 -कर्शनः; G1 -सूदन (for -कर्शन). — D4 om. (hapl.) 3c-5d. V1 reads 3cd on marg. — c) K4 B6 Dn1 D5 D2. 3. 8 कारण-; B0. 8 (marg. as in text) Dn4 D5. 7 कारणं (for °णैः). K1 B6 श्रेष्ठं; K2. 6 Da4 श्रेष्ठं; B6 (marg.) श्रेष्ठान्; Dn1 श्रेष्ठं; D5. 7 सांख्यं (for श्रेष्ठ्यं). — d) K1. 2. 6 B7 योगान्; B6 (marg.) योगान्; D5. 7 T1 G3. 6 योगं; D8 योगे (for योगाः).

4 D4 om. 4 (cf. v. l. 3). M1. 8 om. (hapl.) 4ab. — a) K5. 7 वेदं; Da4 देवं; G1 ते तु (for चेदं). — b) K1 सांख्यः; M5. 7 सांख्यं (for सांख्याः). M8 मनीषिणः (for द्विजातयः). — c) T1 G6 विज्ञायैव (for °येह). K1 गते; K8 Da4 G1 गतिः (for गतीः). G5 विज्ञायांतवतीः सर्वा. — d) Da1 विरक्ते; D5. 7 विमुक्तो; M7 विरक्ता (for °क्तो). K5 (before corr. as in text) विषये तु (for °येषु). K4 च (for यः).

5 D4 om. 5 (cf. v. l. 3). — a) K6 B7 8 स्व-; K7 D5 सु-; T2 सं- (for स). K2 सुव्यक्तो; Da4 lacuna (for °क्तं). G5 M1. 5-7 ऊर्ध्वं स्वदे- (G5 स दे-) हसुस्सुव्य-. — b) K1. 2 विमुच्येतेति नान्यथा; D5. 7 मुच्येदिति मतिर्मम. — D5 om. (hapl.) 5c-7a. — c) K1 G1 सांख्यो; K2. 4 V1 B0 D5 T2 G3. 6 M1. 5-7 सांख्या (for सांख्यं). G1 योग- (for मोक्ष-). Dn4 -साधनं; G5 -दर्शिनः (for -दर्शनम्).

6 D5 om. 6 (cf. v. l. 5). — a) K1. 2. 4. 7 D5. 7. 8 स्वपक्ष- (for °क्षे). K4 D5 -कार्यं (for का°). — D7 om. (hapl.) 6bc. — b) K1. 4. 7 D4. 8 समर्थ-; B6 स्वपक्ष-; Dn1 Da1 D5 समये; Dn4 समत्वे (for (for °र्थं). K2 हितं; K4 हिते (for हितम्). — d) D7 G6 तद्विधैः. G1 -संहितैः (for -संमतैः).

7 D5 om. 7a (cf. v. l. 5). — a) T2 -हेतुतो

C 12. 11043
B. 12. 301(300). 8
K. 12. 303. 9

उभे चैते मते ज्ञाने नृपते शिष्टसंमते ।
अनुष्ठिते यथाशास्त्रं नयेतां परमां गतिम् ॥ ८
तुल्यं शौचं तयोर्युक्तं दया भूतेषु चानघ ।
व्रतानां धारणं तुल्यं दर्शनं न समं तयोः ॥ ९
युधिष्ठिर उवाच ।
यदि तुल्यं व्रतं शौचं दया चात्र पितामह ।
तुल्यं न दर्शनं कस्मात्तन्मे ब्रूहि पितामह ॥ १०
भीष्म उवाच ।
रागं मोहं तथा स्नेहं कामं क्रोधं च केवलम् ।
योगाच्छित्त्वादितो दोषान्पञ्चैतान्प्राप्नुवन्ति तत् ॥ ११
यथा चानिमिषाः स्थूला जालं छित्त्वा पुनर्जलम् ।
प्राप्नुवन्ति तथा योगास्तत्पदं वीतकल्मषाः ॥ १२
तथैव वागुरां छित्त्वा बलवन्तो यथा मृगाः ।
प्राप्नुयुर्विमलं मार्गं विमुक्ताः सर्वबन्धनैः ॥ १३
लोभजानि तथा राजन्बन्धनानि बलान्विताः ।
छित्त्वा योगाः परं मार्गं गच्छन्ति विमलाः शिवम् ॥ १४
अबलाश्च मृगा राजन्वागुरासु तथापरे ।
विनश्यन्ति न संदेहस्तद्वद्योगबलादृते ॥ १५

---

(for -हेतवो). — b) G3 सांख्य- (for सांख्याः). — B6 Da3, a4 D8 om. (hapl.) 7cd; V1 reads the same on marg. — c) B0 त्वेते; G2 युक्ते (for तत्त्वे). — Dn1 D4, 7, 8 om. (hapl.) 7d–8a. — d) G2 om. तात. K1 G2 युधिष्ठिर.

8 Dn1 D4, 7, 8 om. 8a (cf. v. l. 7). D7 om. (hapl.) 8ab. — a) B6 (marg. as in text) उभे चैवं; M5 उभावेते. K4, 6 B7–9 Da3 D5, 9 ज्ञाते (for ज्ञाने). — b) M1, 5–7 युक्ते वै (for नृपते). — c) K1 D5, 7 अनुष्ठिते; K2, 4 °ष्ठिटे (for °ष्ठिते). G1 यथा शास्त्रे.

9 a) D5, 7 सत्यं (for तुल्यं). K1 Dn2 Dn1 D2, 5, 7, 8 तपो(K1 °यो)युक्तं; K2, 4 तयोरुक्तं; K7 D4, 9 तयोर्व्यक्तं; B6, 9 तयोर्युक्तं; B8 (marg.) त्वयोयुक्तं; T G2, 3, 6 तयोरेका; G3 तयोर्हेकं; M1, 5–7 हृयोरेकं (for तयोर्युक्तं). — b) K1 यद्वा (for दया). Dn4 वा (for च). — c) G1 भूतानां (for व्र°). — d) K3 च (for न). Da4 दर्शनं तत्समं तयोः; G1 °नं नाम संक्षयोः. — After 9, T G2, 3, 6 ins.:

745* तयोस्तु दर्शने सम्यक्सूक्ष्मे भावे प्रसज्यते ।

[T2 G6 सूक्ष्मभावे; G1 सूक्ष्माभावो (for सूक्ष्मे भावे).]

— After 9, B6 ins. an addl. colophon [*Sub-parvan*: मोक्षधर्म. — *Adhy. name*: योगविधि)].

10 G3 om. the ref. — a) D4 G3 तुल्य- (for तुल्यं). — b) G3 यथा (for दया). K6 Dn1, n4 D8 कथं तथा (for पितामह). — K3 B6 om. (hapl.) 10cd. D7 reads 10cd twice. — c) K4, 6 Dn1, n4 D8 D2, 3, 8 T1 G2, 3, 6 न तुल्यं (by transp.); T2 न तुल्य-. — d) D6 तयोर् (for तन्मे). T2 महामते (for पितामह).

11 b) Da3, a4 धर्मं (for कामं). — c) G2, 3 योगं (for योगात्). K1, 2, 4 [अ]हितान्; K6, 7 V1 B7, 9 Da4 Dn1, n4 Ds1 D2, 3 (marg. as in text), 4, 5, 7–9 T1 ततो (for [आ]दितो). — d) K6 यत्र (for पञ्च). K1, 4 तां; V1 T G1, 3, 6 M1, 5–7 ते; B6, 7, 9 Da3 तान् (for तत्).

12 a) D7 तथा (for यथा). K1, 2, 6 D4, 5, 7 वा; K4, 7 B0 Dn1, n4 D8 D2, 3, 8 [पु]र (for च). K1, 2 V1 B6–8 Da3, a4 D4, 5, 7, 8 M1, 5, 6 स्थूलं; T2 स्थूलो (for स्थूला). ❀ Ca. n. s.: अनिमिषाः, मत्स्याः । ❀ — b) B9 खित्वा (for छित्त्वा). — c) B6, 8 T1 G2, 6 तथा योगात्; G1 तपोयोगात् (for तथा योगास्). ❀ Cn: योगशब्दोऽत्र प्रायेण मत्त्वर्थीयोऽच्प्रत्ययान्तः (Pāṇini 5. 2. 127) योगिपरः प्रकरणाज्ज्ञेयः । ❀ — d) D5, 7 श्वसंवं; G1 पदवीं (for तत्पदं). K4 Da4 -कल्मषः; K7 D4, 5, 7, 8 -कल्मषं (for -कल्मषाः). G3 पदवीं यात्यकल्मषाः.

13 a) D5, 7 यथैव (for त°). K1 वागुरौ; B8 M6 °राम्; Da4 °रं; M7 °रा (for °रां). ❀ Ca. n: वागुरां, पाशवर्तीं स्नायुरज्जुम् । ❀ — b) G3 पलायंते (for बलवन्तो). D5, 7 महा- (for यथा). — c) G3 प्राप्नुवन् (for °युर्). K1 D4, 9 G3 निर्मलं; T2 G1 विमला (for °लं). — d) K1 गच्छंति; K7 D4, 9 निर्मुक्ताः; M7 विमुक्तः (for °क्ताः).

14 a) T2 G1 लोहजानि; M1, 5–7 योग° (for लोभ°). — c) K1, 2 V1 T1 G2, 6 योगात् (for योगाः). — d) K6, 7 B6, 7, 8 (marg.), 9 Da3, a4 Dn1, n4 D8 D2, 3, 8 T G1, 2, 6 M1, 5–7 विमलं; G3 परमं (for विमलाः). V1 ध्रुवं (for शिवम्).

15 a) G1 यथा (for मृगा). — b) K7 B6 Da3 D2, 3 T G1, 2, 6 यथापरे (for तथा°). D5, 7 वागुरासु स्थिताः परे. — c) K6, 7 G3 विनश्य(K6 °श्यं)ति; D2, 3

C. 12. 11263 B. 12. 30 (9-0). 24 K 12. 306. 24

विशन्ति चावशाः पार्थ योगा योगबलान्विताः ।
प्रजापतीनृषीन्देवान्महाभूतानि चेश्वराः ॥ २४
न यमो नान्तकः क्रुद्धो न मृत्युर्भीमविक्रमः ।
ईशते नृपते सर्वे योगस्यामिततेजसः ॥ २५
आत्मनां च सहस्राणि बहूनि भरतर्षभ ।
योगः कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥ २६
प्राप्नुयाद्विषयांश्चैव पुनश्चोग्रं तपश्चरेत् ।
संक्षिपेच्च पुनः पार्थ सूर्यस्तेजोगुणानिव ॥ २७

बलस्थस्य हि योगस्य बन्धनेशस्य पार्थिव ।
विमोक्षप्रभविष्णुत्वमुपपन्नमसंशयम् ॥ २८
बलानि योगे प्रोक्तानि मयैतानि विशां पते ।
निदर्शनार्थं सूक्ष्माणि वक्ष्यामि च पुनस्तव ॥ २९
आत्मनश्च समाधाने धारणां प्रति चाभिभो ।
निदर्शनानि सूक्ष्माणि शृणु मे भरतर्षभ ॥ ३०
अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः ।
युक्तः सम्यक्तथा योगी मोक्षं प्राप्नोत्यसंशयम् ॥ ३१

---

विक्षिपति तुच्छीकरोति ॥ Cv: व्यूहते, विरोधितया तर्कयति । ❀

24 $^{a}$) K1.2.4 Da3 T G1.3.5 Ca चावशात्; D5 वावशाः (for चा°). ❀ Cn: अवशाः, स्वतन्त्राः ॥ Cv: अवशाः विष्णुवशाः, सूर्योरवशा वा । ❀ — $^{b}$) B7.8 Dn1.n4 Ds2 D3.5.7 योगात्; Da3.a4 G1 योगो; G2 योगं; G6 योगात् (for योगा). D5 °बलान्वितः. — $^{c}$) D1.7 प्रजापतिर्ऋषिर्देवा. — $^{d}$) K7 चेश्वरः (for °राः).

25 $^{a}$) Da3.a4 धर्मौ (for यमो). T G1.2.6 क्रूरो; G3 कालो (for क्रुद्धो). — $^{b}$) K3 Da3.a4 Ds1 D4.9 मृत्यु°; Dn4 मृत्युं (for मृत्युर्). K4 °विक्रम. — $^{c}$) K2.4 नृप ते; K7 Ds1 ईशंते (for ईशते). K7 नृपतेः. K1 D6 सर्वो; K2.4 सर्गो; V1 सर्व; T1 मरवे (for सर्वे).

26 26–27 quoted in Śaṁkara's Br. Sū Bhāṣya on 1. 3. 27. — $^{a}$) K1.2.7 Ds1 D5.7 आत्मानं (for आत्मनां). Br. Sū Bhāṣya आत्मनो वै शरीराणि. — $^{c}$) K7 B6 Dn4 D6 D4.9 T G1.2.6 M1.5–7 योगी; D5 योगे; D7 योगं (for योगः). K1.2.4 महीं (for बलं). — $^{d}$) K6 D6 सर्वै (for सर्वैर्). T2 M1.5–7 transp. महीं and चरेत्.

27 27$^{ab}$ is damaged in B6. — $^{a}$) B0 विषयं. K4 V1 B7–9 Da3.a4 Dn1.n4 D5 D2.3.8 M6 कश्चित्; K6 lacuna; B0 किंचित्; G2 नैव; Śāmkarabhāṣya कैश्चित् (for चैव). — $^{b}$) T G1.3.6 तपश्चोग्रं पुनश्चरेत्; Cn Śāmkarabhāṣya कै(Cn क)श्चिदुग्रं तपश्चरेत्. — $^{c}$) K4 संक्षिपेच्च; K6 Da3 संहिपेच्च; Dn4 संक्षिपे च; G1 संक्षिपेच्च (for संक्षि°). B0.7.8 (marg. as in text) Dn1.n4 Da3 D2.3.5.7.8 तान्; Ds1 तानि; M1.7 प्राज्ञः (for पार्थ). — $^{d}$) K4 B0 Dn4 D5.8.9 गुणानि च (for °गुणानिव). Śāmkarabhāṣya सूर्यो रश्मिगणानिव.

28 $^{a}$) K2 lacuna; K7 D5.7 नु; D4 तु; G1 च (for हि). — $^{b}$) D5 lacuna; D8 बंधक्लेशस्य; T1 G5 बंधने तस्य (for °नेशस्य). D4 पार्थिवः. ❀ Cs: बन्धनेशस्य, कामादिनियमनसमर्थस्य ॥ Cv: बन्धने करणानां विग्रहे, ईशस्य समर्थस्य । ❀ — $^{c}$) K7 B0.7 Dn1.n4 D5 D2.3.8 T1 G3.6 विमोक्षे; G1 विमोक्षं (for °क्ष°). — $^{d}$) K1.2 D4.8 न संशयः; K7 असंशयः.

29 $^{a}$) G1 बलस्य (for बलानि). K6 V1 B0.6.7.9 Da3.a4 Dn1.n4 D5 D2.3.5.7.8 G5 योग° (for योगे). B7 Dn1 D5 D2.3.8 °प्राप्तानि (for प्रोक्तानि). — $^{b}$) K3 मयोक्तानि (for मयैतानि). — $^{c}$) D5 निदर्शनार्थे; T G1.6 निदर्शितानि; G3 °र्शनानि (for °र्शनार्थं). D4.8 सूक्ष्माणि. — D4.7 om (hapl) 29$^{d}$–30$^{c}$; V1 reads the same on marg. — $^{d}$) K6 वक्षामि. K7 D4.8 [इ]ह (for च). K1.2.4 D3 तथा (for तव).

30 D4.7 om 30$^{abc}$ (cf. v. l. 29). V1 reads 30$^{abc}$ on marg. — $^{b}$) K1 V1 B7.8 (marg.) Da4 Cn धारणा; K2 धारणाः; K6 धारागां; K7 Ds1.s2 (before corr.) G2.6 M1.5–7 धारणं; B9 वारणा (for धारणां). K1.7 D4.9 चाभिभोः; K3 शाभिभो; K4 वा विभो; K6 नादिनां; V1 B6.7.9 Da3.a4 भाविता (Da4 °ना); B0.8 Dn1.n4 D5 D2.3.8 वा विभो (for चाभिभो). ❀ Cn: धारणा, नाभ्याद्यन्यतमदेशे चित्तस्य स्थिरीकरणम् । ❀ — $^{c}$) K1.2.4 निदर्शनार्थं (for °नानि). K3 सूक्ष्मानि; D4.8 सूक्ष्माणि. — $^{d}$) T2 श्रुणु. B0 भरतर्षभाः; B6.7.9 Da3.a4 मनुजर्षभ (Da4 °भः).

31 $^{a}$) K1 om. (hapl.) from धन्वी up to यथा (in 32$^{a}$). — $^{b}$) K7 V1 B0.6.8.9 Ds1 D4.5.7.9 T1 G1.3.6 M1.5–7 लक्ष्यं; Da3 वक्ष्यं (for लक्ष्यं). — T1 om. (hapl.) 31$^{c}$–37$^{b}$. — $^{c}$) Ds1 युक्ता (for युक्तः). K6 Da4 तथा (for तथा). — $^{d}$) K6 आप्नोति (for प्रा°). K2 संशयं; K7 B7 असंशयः.

स्नेहपूर्णे यथा पात्रे मन आधाय निश्चलम् ।
पुरुषो यत्त आरोहेत्सोपानं युक्तमानसः ॥ ३२
युक्त्वा तथायमात्मानं योगः पार्थिव निश्चलम् ।
करोत्यमलमात्मानं भास्करोपमदर्शनम् ॥ ३३
यथा च नावं कौन्तेय कर्णधारः समाहितः ।
महार्णवगतां शीघ्रं नयेत्पार्थिव पत्तनम् ॥ ३४
तद्वदात्मसमाधानं युक्त्वा योगेन तत्त्ववित् ।
दुर्गमं स्थानमाप्नोति हित्वा देहमिमं नृप ॥ ३५
सारथिश्च यथा युक्त्वा सदश्वान्सुसमाहितः ।
देशमिष्टं नयत्याशु धन्विनं पुरुषर्षभ ॥ ३६
तथैव नृपते योगी धारणासु समाहितः ।
प्राप्नोत्याशु परं स्थानं लक्षं मुक्त इवाशुगः ॥ ३७
आवेश्यात्मनि चात्मानं योगी तिष्ठति योऽचलः ।
पापं हन्तेव मीनानां पदमाप्नोति सोऽजरम् ॥ ३८

32 W. 31, cf. 12. 304. 22-23. K1 om. up to यथा; T1 om. 32 (for both, cf. v. l. 31). — a) Da1 पूर्व (for -पूर्णे). ❀ Cn: पात्रे, शिरसि धृते। ❀ — b) B4 निश्चलां; G3 °लः (for °लम्). — c) K4 V1 B0. 6-9 Da3 a4 Dn1 D2 D3. 5 7 8 T2 युक्त; K5 मुक्त; Dn4 ध्यक्त; D3 यान (for यत्त). — d) M1 सोपाना (for °नं). K5 मुक्त (for युक्त-).

33 T1 om. 33 (cf. v. l. 31). — a) K4. 7 युक्ता; V1 B0. 5. 7 8 (marg. as in text). 9 Da3. a4 Dn1. n4 D2 D3. 5 7. 8 युक्तम् (for युक्त्वा). D2 om. from यमात्मानं up to शीघ्रं (in 34c). B8 परात्मानं (for [त]थायमात्मानं). K5 मुक्तस्वथायमात्मानं. — b) K6 Da3. a4 योगं; K7 D4. 8 T2 G1. 3. 6 योगी; B8 (marg. as in text) योगात् (for योगः). K1 निश्चला; K2 निश्चलः; B8 (marg. as in text) निश्चलं (for °लम्). — c) K1 अनूकम् (for अमलम्). — d) Da4 -दर्शन.

34 T1 om. 34 (cf. v. l. 31). D2 om. 34abc (cf. v. l. 33). — a) K2 om. च. K7 D4 कौन्तेय. — b) K2 समन्वितः (for समाहितः). — c) K1. 2. 4 महार्णवगतं शीघ्र. — d) K2 निश्चलः; Dn1. n4 D3 D2-4. 8 -सत्तम; D3. 7 वत्सनः (for पत्तनम्).

35 T1 om. 35 (cf. v. l. 31). — a) K4 -समाधारं; M1. 6-7 -समाधानाद् (for °धानं). — b) K4 Da4 युक्ता; K5 मुक्ता; Da3 मुक्त्वा; Dn1 M1. 6-7 युक्तो; Dn2 युंक्त्वा (for युक्त्वा). Da4 योगो न (for योगेन). K1. 2. 6. 7 V1 B0. 7. 9 (marg. as in text). 8 Da3 D4. 5. 7. 8 G2 योगवित् (for तत्त्व°). — c) Dn4 दुर्गम- (for °मं). Da4 आप्स्यति (for आप्नोति). K1 दुर्गंसंस्थानमाप्नोति; B8 (marg.) दुर्गस्थानमवाप्नोति. — d) K2 मुक्त्वा; M1. 7 भित्त्वा (for हित्वा). Dn1 नृपः.

36 T1 om. 36 (cf. v. l. 31). — a) G1 यदा (for यथा). K4 लब्ध्वा; K6 युक्ता; K7 Dn2 युंक्त्वा; D8 मुक्त्वा; G1 युक्तान्; G6 युक्तः (for युक्त्वा). — After 36ab, K7 D4. 5 read 37cd. K2 om. (hapl.) 36c-37b. G2 om. 36c-39d. — d) V1 धन्विनं; D8. 9 (marg.) रथिनं; D5. 7 वेगेन (for धन्विनं). K1. 2 भरतर्षभ (K2 °भः); B1 Dn4 Da1 D2. 8 पुरुषर्षभं; D3. 7 °र्षभ (for °र्षभ).

37 K2 T1 om. 37ab (cf. v. l. 36, 31). G3 om. 37 (cf. v. l. 36). — a) D8 तथैवं. — b) K1 द्वारणासु; M3 धारणं सु- (for °णासु). — K7 D4. 5 read 37cd after 36ab. — c) T G1. 3 परमं (for [आ]शु परं). — d) K1. 2. 4 चाप; K5 जालान्; V1 B0. 6 9 Da4 Dn1 D3 D5. 7. 8 लक्ष्यं; D4 T1 G1. 6 लक्ष्य-; T2 G2 लक्ष्य (for लक्षं). K6 B8 (marg. as in text) युक्त; Da4 मुक्तम्; D5. 7 बाण (for मुक्त).

38 G3 om. 38 (cf. v. l. 36). — a) V1 B6. 7 Da3 a4 आविश्य; D3 G1 अवेश्य; Dn1. n4 D5. 6. 7 अवेक्ष्य; D3 D2. 3 Cn प्रवेश्य (for आ°). Da4 om. त्मनि चा. ❀ Cn: आत्मनि आत्मानं प्रवेश्य, बुद्धिसाक्षिणं त्वम्प्रवेश्यर्थः। ❀ — b) K6 B8 (marg. as in text) Da3. a4 M1. 6 योगम्; M7 योगं (for योगी). M6 तिष्ठति. K6 B8 (marg. as in text) योचलः; T1 योबलः (for योऽचलः). — cd) B8 (marg. as in text) D5. 7 पापं; T1 आर्तं; T2 G1. 6 जन्तं; Ca पापो (for पापं). K1 हंतीव; K4 B0 D3 D5. 8 हंति च; K6 V1 B1 Da3. a4 D2. 9 हंत्येव; T1 भित्त्वेव; G1 केवैव (for हन्तेव). D8 मीलानां; T2 G3 M7 मानानां (for मीनानां). K7 Dn1. n4 D3 Cn (gloss: पुनीतानां, पवित्राणां लोकपालानामित्यर्थः) पापं हंति पुनीतानां. D8 सोंतरं; T2 सोऽचिरं. ❀ Ca: पापो हन्तेव मीनानामिति। यथा पापः पापाचारो हिंसारुचिर्मीनानां पदं स्थानं प्राप्नोत्येकचित्तः। ❀

39 G3 om. 39 (cf. v. l. 36). — a) Da3. a4 पद्मां (for नाभ्यां). K6 V1 B6. 7 Da3. a4 transp. कण्ठे and शीर्षे. T1 कर्णे (for कण्ठे). — b) K1 M1 वक्षसि; B6 Da3. a4 चक्षुषि (for वक्षसि). D5. 7

नाभ्यां कण्ठे च शीर्षे च हृदि वक्षसि पार्श्वयोः ।
दर्शने स्पर्शने चापि घ्राणे चामितविक्रम ॥ ३९
स्थानेष्वेतेषु यो योगी महाव्रतसमाहितः ।
आत्मना सूक्ष्ममात्मानं युङ्क्ते सम्यग्विशां पते ॥ ४०
स शीघ्रममलप्रज्ञः कर्म दग्ध्वा शुभाशुभम् ।
उत्तमं योगमास्थाय यदीच्छति विमुच्यते ॥ ४१

युधिष्ठिर उवाच ।

आहारान्कीदृशान्कृत्वा कानि जित्वा च भारत ।
योगी बलमवाप्नोति तद्भवान्वक्तुमर्हति ॥ ४२

भीष्म उवाच ।

कणानां भक्षणे युक्तः पिण्याकस्य च भक्षणे ।
स्नेहानां वर्जने युक्तो योगी बलमवाप्नुयात् ॥ ४३
भुञ्जानो यावकं रूक्षं दीर्घकालमरिंदम ।
एकारामो विशुद्धात्मा योगी बलमवाप्नुयात् ॥ ४४
पक्षान्मासानृतूंश्चित्रान्संचरंश्च गुहास्तथा ।
अपः पीत्वा पयोमिश्रा योगी बलमवाप्नुयात् ॥ ४५
अखण्डमपि वा मासं सततं मनुजेश्वर ।
उपोष्य सम्यक्शुद्धात्मा योगी बलमवाप्नुयात् ॥ ४६

---

पार्श्वतः (for °र्श्वयोः). — [illegible] D3.4 [illegible] श्रवणे; Cap स्पर्शने as in text). D5 चापि; T G1.2.3 M1.3-7 चैव; Cap स्नाने (for चापि). K1 दर्शने चक्षुषि घ्राणे; D4 दर्शन-श्रवणे चापि. — b) D3 (marg. as in text) घ्राणे (for घ्राणे). K1 Da3 °विक्रमं; K7 V1 Dn Da1 D8 T1 M1.3-7 °विक्रमः (for °म).

40 a) Da3 om. (hapl.) one यो. D3 योगी च (for यो योगी). — b) B3 (marg. as in text) वशग्रस्तः (for समाहितः). ❀ Cs: महाव्रतं, ब्रह्मचर्यम् । यद्वा, महाव्रतानि कलासुजातोक्तानि (5. 43. 12), ज्ञानं च सत्यं च [illegible] ❀ — c) D5.7 आत्मनं (for °ना). K3 Da3 Da1 G1 सूक्ष्मं; D5.8 सूक्ष्मम्. — d) K7 Da3 G3 युक्ते; D2 युक्तः; T2 G2.3 युक्तस्य; G1 युते; M1.3-7 युक्ते (for युङ्क्ते).

41 a) K1.2.4 शीलम् (for शीघ्रम्). K8 V1 B0.8-9 Da3.a4 Dn1.n4 D3 D2.3.5.7.8 अचलप्रज्ञं (Da1 °र्ज्ञं); T G1.3.8 M1.3-7 अचल(G1 °लः)प्रज्ञः (M1.7 °र्ज्ञं); G2 अमलप्रज्ञं (for °प्रज्ञ). — b) K4.8 D5 दग्ध्वा; K1 हित्वा; G3 कृत्वा (for दग्ध्वा). — d) K7 B3 T G2 यदिच्छति; Dn4 यदीच्छति; Da1 °च्छसि (for °च्छति). ❀ Cn: यदीच्छतीति योगिनः स्वेच्छया ब्रह्मलोकादौ गमनं, विदेहकैवल्यम्, देहधारणं चेति दर्शितम् ॥ Cp: यदीच्छति तदा विमुच्यते, मोक्षेणाप्येव मुक्तः, इति भावः ॥ Cs: कल्पान्तमन्तं तस्य जीवितुं शक्तिरस्तीति सूचितम् । ❀ — After 41, K4 B6 ins. an addl. colophon [*Sub-parvan*: K4 B6 मोक्षधर्म. — *Adhy. name*: K4 B6 योगविधिः. — *Adhy. no.*: K4 120].

42 a) T G6 आहारान् (for की°). K1 आहारान् कीदृशान् कृत्वा (corrupt). — b) G1 कर्म (for कानि). K2.4 जिह्वा (for जित्वा). D5 कश्चित्वा चैव भारत (sic); D7 काश्चित्वा चैव भारत. — c) T1 योगो (for योगी). G3 चाप्नोति (for [अ]वा°). G6 यो योगबलमाप्नोति. — d) K1 (*sup. lin.* as in text). D4.8 अर्हसि (for °ति).

43 D3 om. the ref. — a) K1.2.4 कर्मणां (for कणानां). K2.4 रक्षणे (for भक्षणे). G1 युक्तं (for युक्तः). — b) K8 V1 B0.5.7.9 Da3.a4 Dn1.n4 D5 D2.3.8 G3 M1.3-7 भारत (for भक्षणे). — c) B3 भक्षणे; Da4 वर्जिते (for वर्जने).

44 K2.4 om. (hapl.) 44–46. G1 reads 44–45 on marg. — a) D3 भुंजाना (for °नो). K6 पावकं (for या°). K1 तूक्ष्णं (for रूक्षं). ❀ Cs: यावकं, यवान्नं, रूक्षं तैलघृतादिरहितम् । ❀ — b) Da4 अरिंदमं. — c) K6 B0.8-9 Da3.a4 Dn1.n4 D2.3.8 एकाहारो; V1 D3 °वासो (for °रामो).

45 K2.4 om. 45 (cf. v. l. 44). K1 om. (hapl.) 45. G1 reads 45 on marg. — a) V1 B6 (marg.).8 D5 T G1.2.6 चैव; B0 Da3.a4 Dn1.n4 D2.3.8 चैतान् (for चित्रान्). K7 D4.5.7.9 पक्षं (D4.8 °क्ष°) मासमृतुं चैव. — b) Da3.a4 वत्सरांश्च (for संचरंश्च). K6 गुहां; K7 D5.7.8 T G2.6 गृहाम्; B8.7 अहम्; B6 Da3.a4 गुहाम्; G1 ग्रहं; G3 शुभाम् (for गुहास्). Dn1.n4 D5 D2.3.8 संवत्सरानहस्तथा. — c) Da3 पयोमिश्रो (for °मिश्रा). — d) Da4 om. योगी.

46 K2.4 om. 46 (cf. v. l. 44). — a) G3 यो (for वा). V1 B0.6.7.9 Dn1.n4 Da3 D2.5.7 T1 G1.3 M1.7 मांसं (for मासं). — b) B6 तत्र तं; G3 संततं (for सततं). K7 मनुजेश्वरः; Da1 °श्वरे. — 46cd is

कामं जित्वा तथा क्रोधं शीतोष्णे वर्षमेव च ।
भयं निद्रां तथा श्वासं पौरुषं विषयांस्तथा ॥ ४७
अरतिं दुर्जयां चैव घोरां तृष्णां च पार्थिव ।
स्पर्शान्सर्वांस्तथा तन्द्रीं दुर्जयां नृपसत्तम ॥ ४८
दीपयन्ति महात्मानः सूक्ष्ममात्मानमात्मना ।
वीतरागा महाप्राज्ञा ध्यानाध्ययनसंपदा ॥ ४९
दुर्गस्त्वेष मतः पन्था ब्राह्मणानां विपश्चिताम् ।
न कश्चिद्व्रजति ह्यस्मिन्क्षेमेण भरतर्षभ ॥ ५०
यथा कश्चिद्वनं घोरं बहुसर्पसरीसृपम् ।
श्वभ्रवत्तोयहीनं च दुर्गमं बहुकण्टकम् ॥ ५१
अभक्तमटवीप्रायं दावदग्धमहीरुहम् ।
पन्थानं तस्कराकीर्णं क्षेमेणाभिपतेद्युवा ॥ ५२
योगमार्गं तथासाद्य यः कश्चिद्भजते द्विजः ।
क्षेमेणोपरमेन्मार्गाद्बहुदोषो हि स स्मृतः ॥ ५३

C. 12. 9279
B. 12. 301. 53
K. 12. 306. 53

[illegible] — [c] [illegible] Cv: उपोष्य, [illegible] — [d] ) K7 फलम् ( for बलम् ).

47 [a] ) K4 जिह्वा ( for जित्वा ). G3 यथा ( for तथा ). — [b] ) Dn1 D6. 7 T G1. 3 8 शीतोष्ण ( for °ष्णे ). Dn. वर्षं. M1 6–7 वा ( for च ). — [c] ) G2 द्वयं ( for भयं ). K3 V1 B1 6 7 8 ( marg. ) 9 Da3 a4 Dn1 n4 D5 D5. 8 9 क्रोध ( for निद्रां ). Da4 M7 श्राम ( for श्वासं ). — [d] ) B0. 6 7. 9 ( marg. ) 9 Da3 a4 Dn1 n4 D5 D5. 8. 9 G2 M5–7 Cn 8 पौरुषात् ( for °षं ). K1. 2. 4 विजयं; B5 ( marg as in text ) T G1 3 8 विगर्मं; D5 विनयांस्; D7 निचयांस् ( for विष° ).

48 [a] ) Da3 अरतिर्; D8 7 निर्जित्य; Cv ( gloss: स्वस्मिन् स्त्रीषेषु वा रति ) स्वरतिं ( for अरतिं ). K1 दुर्जयं; Da4 °यांस्. ❀ Cp: अरतिम्, आकस्मम् । ❀ — [b] ) B7 कृष्णां; D4 तृष्णा. T G1–3. 8 M1. 6–7 भारत ( for पार्थिव ). — [c] ) K6 V1 B0 6–8 Da3. a4 Dn1. n4 D5 D5. 8. 5. 7. 8 G3 8 स्पर्शं निद्रां; G2 M6 7. 7 स्पर्शाः सर्वे ( for स्पर्शान्सर्वांस् ). K4. 6 तंत्रीं; K7 Dn1 M1 7 तंद्रीं; D5. 7 G2. 8 तंद्रां ( for तन्द्रीं ). — [d] ) D4 G3 8 M7 दुर्जया ( for °यां ).

49 [a] ) D5. 7 महात्मानं ( for °त्मानः ). — [b] ) K6 D3 सूक्ष्मम्. — [c] ) K1 4 वीतराग- ( for °रागा ). K3. 6. 7 B0. 7–8 Dn1. n4 D5 D5. 4. 8. 8 G1 महाप्रज्ञा; B5 °प्रज्ञौ; D7 °त्मानो ( for °प्राज्ञा ). Da4 वीतरागान्महा-न्प्राज्ञा. — [d] ) K1. 2. 4 ज्ञाना( K1 °न )ध्ययन-; K6 ध्याया°; Da1 धाता°; D6 ध्यानाध्यायन- ( for °ध्ययन- ). K7 D5. 8 -संमताः; B8 -संपदः; D8 C8 -संस्कृताः ( Da3 C8 °ता: ); T G1. 2. 8 -संमताः ( for -संपदा ).

50 [a] ) D6 दुर्गास्. D8 त्वेवं ( for त्वेष ). K1 स यः; K2. 4 मयः; Dn1. n8 Da3 D5 महा-; Dn1 D6 ( also as in text ) यतः ( for मतः ). — Da3. a4 om. 50[cd]. — [c] ) K4. 6 V1 B0. 1. 8 ( marg. as in text ) Dn1 n8 D6 D5. 2. 4. 7. 8 यः कश्चिद् ( for न कश्चिद् ). K5 B8 9 ( marg. as in text ) 9 क्षिप्रं ( for ह्यस्मिन् ). — [d] ) Dn1 क्षेत्रेण ( for क्षेमेण ). D8 sarana for भरतर्षभ. G3 शुभे क्षेमेण भारत.

51 K3 om. 51[ab]. — [b] ) B5 ( marg ) हिंस्र-; D3 सदर्पं ( for -सर्पं ). D5 -सतीसृपं ( for -सरी° ). — [c] ) K3 श्वभ्रवत्; K6 स्वभ्र°; B8 श्वोभ्र°; G1 श्वभ्र° ( for श्वभ्र° ). D8 तोयहीनम्. K4 श्वभ्रवत्तोपहीनं च. — [d] ) K1 दुस्तरं; K2 दुर्लभं; K4 दुर्बलं ( for दुर्गमं ). K2. 4 बहु- ( for बहु ). T2 कर्णकं ( for -कण्टकम् ).

52 [a] ) K7 अनदयम्; B0 अवयक्तम्; Dn1. n4 D5 D5 4 8 9 M1 6–7 अमक्षम्; D8 अभीकगम् ( for अभक्तम् ). G3 अटवि ( for °वी ). — [b] ) Da3. a4 दारु दग्ध ( for दाव° ) D5 om. मही. — [c] ) K3 corrupt. T1 G3 पंथानं तं दुराकीर्णं. — [d] ) B7 अभिपते ( sic ); G3 M3 5 7 अभिपतेद् ( for अभि° ). K1. 2. 4 नरः ( for युवा ). K5 क्षेमेणाभिपते च ( submetric ); Da3. a4 °णाभिप; Da3 °णाभिपतेषु वा; D5. 7 °णाभियते यथा; G1 क्षमेण हि पतेद्युवा; G8 क्षेमेणाभिपतेत वा.

53 Before 53, T2 ins भीष्मः. — [a] ) K2. 4 तथासाद्य; V1 B8 ( marg. ) समासाद्य; Da1 D2 8 तथा सोद्य; T2 तथासाध्या ( for तथासाद्य ). — [b] ) M1. 6–7 न ( for यः ). K6 B0. 6–9 Da3. a4 Dn1. n4 D5 D2. 8. 8 व्रजते; V1 व्रजति; G2 रुजति ( for भजते ). K4 M1 द्विज ( for द्विजः ). K7 D4. 5. 7. 8 कश्चिदेव व्रजे द्विजः. — [c] ) K7 क्षणेन ( for क्षेमेण ). K2 [ओ]परमेन्; D4 [उ]परमान्; D5 °रामा; T1 °रमे ( for °रमेन् ). K1. 2 B8 G2. 8 M7 मार्गं; Da4 T G1. 8 मार्गो ( for मार्गाद् ). — [d] ) K7 स स्मृतां; Da3. a4 संमृतः; Dn4 T2 संस्मृतः ( for स स्मृतः ). G1 बहुदोषाभिसंस्कृतं.

54 54[ab] is damaged in B8. — [a] ) K1 स्वस्थेवं; K6. 7 B7–8 Da3. a4 D5. 8 ख्या° ( for सु° ). K7 क्षुर-; G1 सुर- ( for क्षुर- ). — [b] ) Da3. a4 निशितासु; D6 निशितं सु-; D7 °तं स ( for °तासु ). — [c] ) T1 धार-

C. 12. 10880
B. 12. 300 (301). 54
K. 12. 308. 4

सुस्थेयं क्षुरधारासु निशितासु महीपते ।
धारणासु तु योगस्य दुःस्थेयमकृतात्मभिः ॥ ५४
विपन्ना धारणास्तात नयन्ति नशुभां गतिम् ।
नेतृहीना यथा नावः पुरुषानर्णवे नृप ॥ ५५
यस्तु तिष्ठति कौन्तेय धारणासु यथाविधि ।
मरणं जन्म दुःखं च सुखं च स विमुञ्चति ॥ ५६
नानाशास्त्रेषु निष्पन्नं योगेष्विदमुदाहृतम् ।
परं योगं तु यत्कृत्स्नं निश्चितं तद्द्विजातिषु ॥ ५७
परं हि तद्ब्रह्म महन्महात्म-
न्ब्रह्माणमीशं वरदं च विष्णुम् ।
भवं च धर्मं च षडाननं च
षड्ब्रह्मपुत्रांश्च महानुभावान् ॥ ५८
तमश्च कष्टं सुमहद्रजश्च
सत्त्वं च शुद्धं प्रकृतिं परां च ।
सिद्धिं च देवीं वरुणस्य पत्नीं
तेजश्च कृत्स्नं सुमहच्च धैर्यम् ॥ ५९
नराधिपं वै विमलं सतारं
विश्वांश्च देवानुरगान्पितॄंश्च ।
शैलांश्च कृत्स्नानुदधींश्च घोरा-
न्नदीश्च सर्वाः सवनान्घनांश्च ॥ ६०

नास्य (for °आसु). K7 D5. 7. 8 च (for तु). Dn4 यागस्य (for यो°). — d) Some MSS दुस्थेयम्; T2 सुस्थेयम् (for दुःस्थेयम्).

55 a) G1 M1. 6. 7 विपन्न-; G3 विभिन्न- (for विपन्ना). G1 -धारणा (for धारणाम्). — b) G3 न यांति (for नयन्ति). D5. 7 G3 च (for न-). K2 नयनभरतर्षभ (sic). — c) K1. 7 Da4 Ds2 D4. 5. 7. 8 G1. 2. 6 नेत्रहीना; Ds1 नैत्र°; M1. 6. 7 नेत्रहीनान् (for नेतृहीना). G1 om. (hapl.) यथा ना. K1. 2 V1 नावं. — d) K1 पुरुषा (for °षान्). D5. 7 पुरुषांतमर्णवेनृप.

56 a) G1 तिष्ठ तिष्ठति कौतेय. — b) D8 G1 यथा विधिः. — cd) K2 -दु खे (for दुःखं). D5 वा (for च). G2 M1. 5-7 मरणाज्जन्म दुःखाच्च सुखं हि (M5 च) स विमुच्यते.

57 a) D1. 7 -शास्त्रेषु (for -शा°). K2 निष्पन्नं; Dn4 निर्व्यंतं (for निष्पन्नं). — b) G3 लोकेषु (for योगेषु). K1. 2 T2 G3 स्वयम् (for इदम्). — c) K1. 2. 4 योगं च; K6 V1 Bo. 6 7 Da3. a4 Dn1. n4 D8 D2. 3. 8 योगस्य; B8 योगेषु (for योगं तु). K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 6 कृत्सं; K7 D4. 8 सूक्ष्मं (for कृत्स्नं). — d) B7 स (for तद्).

58 a) K1 G1 यद्; D4 ते; M1. 7 तं (for तद्). Bo. 8 Dn1. n4 D8 D2. 3. 8 G1 ब्रह्ममयं; D5 M1. 6. 7 ब्रह्म महान्; G3 ब्रह्म** (for ब्रह्म महन्). K2 महात्म; Da4 M6-7 महात्मा; D8 lacuna (for °त्मन्). ❀ Cv (reading परं महद्ब्रह्म महन्महात्मन्): हे महात्मन् युधिष्ठिर, परम् उत्तमम्, तद् योगकौशलाख्यं ब्रह्म वेदः। योगस्य वेदसारत्वाद्वेदत्वम्। ❀ — b) D5. 7 ब्रह्मण्यम् (for ब्रह्माणम्). — c) K2 भवे; G1 वरं; G6 भयं (for भवं). G2 om (hapl) धर्मं च. K7 V1 D2. 5. 7. 8 सनातनं (for षडाननं). K4 भवेद्धर्मं च सुताडनं च. — d) V1 B7 Da3 Dn1. n4 D2. 3. 5. 7. 8 यद्; G1 तद् (for षड्-). V1 महानुभावाः; Da4 Ds1 T2 °भावात्; D5. 7 °भावं (for °भावान्). K7 षडाननं यच्च महानुभावान्. ❀ Cs: षड्ब्रह्मपुत्राः, मरीच्यत्र्यङ्गिरसपुलस्त्यपुलहक्रतुरिति संभवपर्वण्युक्ताः (1. 59. 10)। ❀ ❀ Cn: महानुभावान्, ऋषभकपिलादीन्। ❀

59 a) D2 तमस्व-; D7 तमस्स- (for °श्च). D5. 7 रजस्व (for रजश्च). — b) K1 शुद्धिश्च; K2 च शुद्धि-; Da3 Dn1. n4 Ds2 D8 Cn विशुद्धं; D5 G3. 6 M1. 6. 7 च शुद्धिं; D7 *शुद्धिं; G1 विशुद्धिं (for च शुद्धं). K1 T2 परान् (for परां). — c) D5 देवी (for देवीं). K1 पत्नी. ❀ Cp: वरुणस्य पत्नीम्, वरुणायत्तां सिद्धिम्। ❀ — d) K1. 2. 4 Ds1 G1 सु(K1 स्व)महश्च (for °च्च). K1. 2. 4 D5. 7 शौर्यं; D4 धैर्यें; T G3. 6 सूर्यं; G1 वीर्यं (for धैर्यम्).

60 a) K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 8 च (for वै). K2 B3 (marg.) सुतारं; G3 वै सतारं (for सतारं). — b) K7 विश्वेश्व-; D4 G1 विश्वाश्च; M1. 7 विश्वे च (for विश्वांश्च). G2 असुरान् (for उरगान्). B7 च पितॄन् (by transp.). — c) K1. 2 सर्वान्; Da4 रुत्स्नान् (for कृत्स्नान्). K1. 2 उदधीश्च. K6 घोरां. — d) K2 G1. 2 नदींश्च (for नदीश्च). K1. 2. 4 सवरान्; Ds2 सनदान्; D5. 8 सनदा; T G1-3 सवना (for °नान्). V1 कयाश्च; D4 घनाश्च; D8 वनांश्च (for घनांश्च). K6 नदी सपर्वा सवलान्वनांश्च; K7 नदींश्च घोरान्सदा घनांश्च; D5. 7 नदीश्च सर्वोपवनान्वनांश्च.

नागान्नगान्यक्षगणान्दिशश्च
　गन्धर्वसंघान्पुरुषान्स्त्रियश्च ।
परस्परं प्राप्य महान्महात्मा
　विशेत योगी नचिराद्विमुक्तः ॥ ६१

कथा च येयं नृपते प्रसक्ता
　देवे महावीर्यमतौ शुभेयम् ।
योगान्स सर्वानभिभूय मर्त्या-
　न्नारायणात्मा कुरुते महात्मा ॥ ६२

इति श्रीमहाभारते शान्तिपर्वणि एकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥

## २९०

युधिष्ठिर उवाच ।
सम्यक्त्वयायं नृपते वर्णितः शिष्टसंमतः ।
योगमार्गो यथान्यायं शिष्यायेह हितैषिणा ॥ १
सांख्ये त्विदानीं कार्त्स्न्येन विधिं प्रब्रूहि पृच्छते　S. 12. 11300 B. 12. 301. 1.2 K. 12. 307. 2

61 [a]) K1.3 नागाश्वगान्; D83 a5 °नुगान् (for °न्नगान्). K3 G2 यक्षगणा; K7 D4.5 पक्षिगणान्; D81 यक्ष° (for यक्ष°). — [b]) K7 -यक्षान्; G1 -सर्वान् (for -संघान्). K2 पुरुषांश्चियश्च (sic); K7 पुरुषं स्त्रियं च. — [c]) K1.4 V1 B3 परं परं; K7 D4.5 पारं परं; T1 G1.3.6 परावरं; T2 G2 Cv परात्परं (for परस्परं). K7 V1 D83 D4.5 M1.3-7 महद् (for महान्). T1 G3.6 महात्मन् (for °त्मा). K3 परां परां प्राप्य महात्मनात्मा. — [d]) T2 विशेत; G2 विशेतु (for °त). K3 योगे; D81 योगात् (for योगी).

62 [a]) K1 D6.7 यथा (for कथा). K1.2 मयेयं; K7 D4.5 चेयं; D5.7 च येषां; T G1.3.6 M1.5.7 च सेयं; M3 स चेयं (for च येयं). D84 नृपतेः. K6 B8.9 D84 प्रयुक्ता; K7 सुप्रसक्ता; D6.7 प्रसक्तो (for °क्ता). ❀ Cn: कथा, जगत्कर्तृत्वादिनिरूपणात्मिका । ❀ — [b]) D81 देवैर् (for देवे). T G1.3.6 -वीर्यतमे; G2 -वीर्यमतः; M1.3-7 °मते (for °मतौ). T G1.6 स्त्रिमाः (for शुभेयम्). K1.2.4 दैवी नृपे वीर्यमतौ शुभेयं; K7 D4.5 देवैर्मता वीर्यमतः (D5 °तौ) शु°. — T G1.3.6 transp. 62[a] and 62[b]. — [c]) K1.2 योगाद्; K4.6 B0.6-9 D83.84 Dn1.n3 D81 D2.5.8 योगी; G1 M1.3-7 लोकान्; G2 योगात् (for योगान्). K1.2.7 D4.5.7.9 च; K3 G2 lacuna (for स). K6 V1 B0.6-9 D83.84 अभिभूयेह; T1 G1.3.6 अतिभाति; G2 अहि-त्येह (for अभिभूय). K1.2 D4.7 T G1.3.6 M5 मर्त्यो; K4 मर्त्यौ (for मर्त्यान्). — [d]) K7 D4.5 स भवेद् (for कुरुते). ❀ Cv: नारायणात्मा, नारायणः आत्मा चित्तं यस्य सः, योगं कुरुते इति योजना । ❀

Colophon. Ś1 D5 missing; K3.5 B1-3 D81 a3 Dn2 n3 D1 G1.3 M2-4 absent. — *Sub parvan:* K1.2.4.6.7 V1 B0.6-9 D81 Dn1 n4 D8 D2-6.7-9 T G1-3.5 M1.3-7 मोक्षधर्म. — *Adhy name:* K1.2.4.6.7 V1 B0.6-9 D83 a4 Dn1.n4 D8 D2-5.7-9 M1.6 योगविधिः; G6 योगकथनं. — *Adhy. no.* (figures, words or both): K6 25; B3 T2 G1.3 124; B8 127; Dn1 126; Dn4 D83 G3 M3 125; D81 114; D3 121; T2 137; G2 140; M1.6.7 123. *Śloka no.:* D84 Dn1 62; Dn4 D8 61.

## 290

☞ This adhy. is missing in Ś1 D5 (cf. v. l. 12. 274 13; 283. 15).

1 D81 reads 1-3 twice — [a]) K3 [अ]थ नृपतिर्; G1 यज्ञपतेर्. — [b]) K2 संपदः; B0 -संमितः; D84 संमताः (for -संमतः). — [c]) K1 योगमार्गे; D84 °मार्ग (for °मार्गो). — [d]) G1 शिष्टायेह; G2 शिष्या-येह. G2 हितैषिणः.

2 For the repetition in D81, cf. v. l. 1. — [a]) B6 (marg. as in text). 9 T2 G1 सांख्यं (for सांख्ये). — [b]) G1 बुद्धिं (for विधिं). B1 ब्रूहि (for प्र). K6 प्रच्छते. — [c]) K1 om. च. G2 विज्ञानं (for यज्ञार्थं).

C. 12. 11099 B. 12. 302. 2 K. 12. 307. 2 त्रिषु लोकेषु यज्ज्ञानं सर्वं तद्विदितं हि ते ॥ २

भीष्म उवाच ।

शृणु मे त्वमिदं शुद्धं सांख्यानां विदितात्मनाम् ।
विहितं यतिभिर्बुद्धैः कपिलादिभिरीश्वरैः ॥ ३
यस्मिन्न विभ्रमाः केचिद्दृश्यन्ते मनुजर्षभ ।
गुणाश्च यस्मिन्बहवो दोषहानिश्च केवला ॥ ४
ज्ञानेन परिसंख्याय सदोषान्विषयान्नृप ।
मानुषान्दुर्जयान्कृत्स्नान्पैशाचान्विषयांस्तथा ॥ ५
राक्षसान्विषयाञ्ज्ञात्वा यक्षाणां विषयांस्तथा ।
विषयानौरगाञ्ज्ञात्वा गान्धर्वविषयांस्तथा ॥ ६
पितॄणां विषयाञ्ज्ञात्वा तिर्यक्षु चरतां नृप ।
सुपर्णविषयाञ्ज्ञात्वा मरुतां विषयांस्तथा ॥ ७
राजर्षिविषयाञ्ज्ञात्वा ब्रह्मर्षिविषयांस्तथा ।
आसुरान्विषयाञ्ज्ञात्वा वैश्वदेवांस्तथैव च ॥ ८
देवर्षिविषयाञ्ज्ञात्वा योगानामपि चेश्वरान् ।
विषयांश्च प्रजेशानां ब्रह्मणो विषयांस्तथा ॥ ९
आयुषश्च परं कालं लोके विज्ञाय तत्त्वतः ।
सुखस्य च परं तत्त्वं विज्ञाय वदतां वर ॥ १०

— $^{d}$ ) D5.7 नु ( for तद्‌ ).

3 For the repetition in D31, cf. v. l. 1. G3 om. the ref. — $^{a}$ ) M1 त्वद्‌ ( for त्वम्‌ ). K1.7 D4.8 T G3 इमं ( for इदं ). Dn1 n4 D31 ( both times ), 32 D5.8 8 सूक्ष्मं; T G1–3 8 M1.5–7 कृत्स्नं ( for शुद्धं ). — $^{b}$ ) K6 D33 D5.7 T G1.3.8 विदितं ( for विहितं ) D3 यातिभिः; D5.7 विहितैर्‌; G2 यदिदं ( for यति-भिर्‌ ). K3 त्वद्धैः ( sic ); K4 बद्धैः; K6 B6 D33 34 वृद्धैः; B0 पूर्वं; Dn1 D3 सर्वैः; Dn4 D31 ( both times ), 32 D5.8 सर्वं; T G1.3.6 मुक्तैः ( for बुद्धैः ).

4 K7 reads 4 on marg. — $^{a}$ ) K3.4 सविभ्रमाः ( for न विभ्रमाः ). — $^{b}$ ) K1.3.4.7 D4.5.7.8 मनुजा-धिप; T1 G3 भरतर्षभ ( for मनुज° ). — $^{c}$ ) D4 om. from गुणाश्च up to विष ( in 5$^{b}$ ). T1 तस्मिन्‌ ( for य° ). D5.7 गुणाश्च बहवो यस्मिन्‌. — $^{d}$ ) D32 केवलं; G1 °लाः. ❀ Cs : केवला, कृत्स्ना । ❀

5 D4 om. up to विष ( cf. v. l. 4 ). — $^{a}$ ) K3 सांख्यान; G4 संख्याये ( for °य ). — $^{b}$ ) K3 स्वदोषान्‌. T G1.3.8 दोषान्विषयजान्नृप. — D5.7 om. ( hapl. ) 5$^{c}$–7$^{b}$. — $^{c}$ ) G1.3 मानुष्यान्‌ ( for °षान्‌ ). G1.3 M1.5–7 विषयान्‌ ( for दुर्जयान्‌ ).

6 D5.7 om. 6 ( cf. v. l. 5 ). T1 om. ( hapl. ) 6$^{a}$–8$^{b}$. — $^{a}$ ) Dn4 राजसान्‌ ( for राक्ष° ). — G1 om. 6$^{b}$. — $^{b}$ ) K6 यज्ञानां ( for यक्षाणां ). — K1.2.4 om. ( ! hapl. ) 6$^{c}$–7$^{b}$. K7 B6 D33.34 D3.4.8 om ( hapl. ) 6$^{cd}$. G3 om. ( hapl. ) 6$^{c}$–7$^{d}$. G6 om. ( hapl. ) 6$^{c}$–8$^{b}$. — $^{c}$ ) T2 चौरगान्‌ ( for और° ). — D8 reads 6$^{d}$–8$^{a}$ on marg. — $^{d}$ ) K6 T2 G2 M1.5–7 गां( G2 गं )धर्वान्‌; B0 गंधर्व-; G1 ब्रह्मर्षि- ( for गान्धर्व- ).

7 K1.2.4 D5.7 om 7$^{ab}$ ( cf. v. l. 6, 5 ). T1 G3.6 om. 7 ( cf. v. l. 6 ). D8 reads 7 on marg. — $^{a}$ ) K3 D4.8 पितॄणां; D33.34 देवर्षि- ( for पितॄणां ). — $^{b}$ ) K7 D4.8 T2 M1.5–7 तिर्यक्च; G1 °क्सं- ( for °क्षु ). K3 चरता; D31 चरतो. D34 नृपः. — B3 transp. 7$^{cd}$ and 8$^{ab}$. — $^{c}$ ) D34 D7 सुवर्ण- ( for सुपर्ण- ). — K3.4 om. ( hapl ) 7$^{d}$–8$^{c}$. — $^{d}$ ) K7 D4.8 मारुतान्‌ ( for मरुतां ). D5 om विषयां.

8 K2.4 om. 8$^{abc}$ ( cf. v. l. 7 ). T1 G6 om 8$^{ab}$ ( cf. v. l. 6 ). D5.7 om. ( hapl. ) 8–9. B3 transp. 7$^{cd}$ and 8$^{ab}$. — $^{a}$ ) T2 G3 आसुरान्‌ ( for राजर्षि- ). — $^{c}$ ) T2 G3 देवर्षि- ( for आसुरान्‌ ). — K5 om. ( hapl ) 8$^{d}$–9$^{a}$. — $^{d}$ ) G1 तिर्यक्संचरतां नृप ( cf. 7$^{ab}$ ).

9 K6 om. 9$^{a}$; D5.7 om. 9 ( for both, cf. v. l. 8 ). — $^{a}$ ) T2 G3 राजर्षि-; G1 सुपर्ण- ( for देवर्षि- ). — $^{b}$ ) D4 यागानाम्‌; T1 G1.3.6 योगि° ( for योगा° ). — $^{c}$ ) K1.2 V1 B6.7.9 G2 M1.5–7 प्रणाशांतान्‌; K6 T2 प्रशांतानां; D33 34 प्रशांतात्मा; G1 प्रमत्तानां; G3.6 प्रशस्तानां ( for प्रजेशानां ). B0.8 Dn1. n4 D3 D2.3.8 प्रजापतीनां विषयान्‌. — $^{d}$ ) G3 ब्राह्मणो ( for ब्र° ).

10 $^{a}$ ) D7 आयुषं. M7 कायं ( for कालं ). ❀ Cs : परं कालं, अवसानकालम्‌ । ❀ — $^{b}$ ) T1 G6 योगी ( for लोके ). K2 विज्ञात- ( for विज्ञाय ). — $^{c}$ ) G1 सुखं तस्य ( for सुखस्य च ). ❀ Cs : सुखस्य परं तत्त्वं, मोक्षस्य परमानन्दरूपत्वम्‌ । ❀ — $^{d}$ ) V1 वरः ( for वर ). — After 10, K7 reads 12$^{c}$–13$^{b}$.

11 D34 om. ( hapl. ) 11$^{bc}$. — $^{b}$ ) B0.7–9 Dn1. n4 D8 D2–4.8 सततं; D5.7 G6 यततां ( for च° ). ❀ Cs : यततां, विषयान्वेषणाय तत्र तत्र धावताम्‌ । ❀ — $^{c}$ ) K6

